# विषवैद्यसारसमुच्चयम् पूर्वभागः

https://sa.wikisource.org/s/8mp

- **विषवैद्यसारसमुच्चयम् उत्तरभागः**
- **विषवैद्यसारसमुच्चयम्**

श्रीरीसदाशिवाय नमः
पूऊर्वभागः
विषवैद्यसारसमुच्चयम्

तर्काम्भोरुहसारसुन्दरसुधाम् आस्वाद्य तुष्टाशयं
संगीतामृतसागरान्तरगतं भूदेवचूडामणिम् ।
वेदान्तोपनाधिवासरसिकं कैशोरकान्तारजं
वन्दे ऽहं गुरुम् आदरेण सततं श्रीवासुदेवाह्वयम् ॥ १.१ ॥

यत्पादाम्बुजम् आश्रिता हि बहवः शास्त्राब्धिपराङ्गताः
यत्कारुण्यलवेन निर्धनजनाः वित्तेशताम् आगताः ।
यत्कीर्त्या विशदीकृतं जगद् इदं श्रीसङ्गं माख्यालय
श्रीमद्विप्रशिरोमणिं गुणनिधिं वन्दे तम् अस्मद्गुरुम् ॥ १.२ ॥

उद्वास्य कालिथमहिं विषदूषितान्तां
शुद्धं चकार यमुनां कृपया पुरा यः ।
सो ऽयं भवाब्धिविषयाहि विगीर्णगात्रान्
अस्मान् पुनातु भगवान् अचिराद् अपाङ्गैः ॥ १.३ ॥

वन्दे विघ्नेश्वरं वाणीं कुमारविहगाधिपौ ।
स्वगुरून् अपि विघ्नानां अपनुत्यै पुनः पुनः ॥ १.४ ॥

निरीक्ष्य विषतन्त्राणि तेभ्यः सारसमुच्चयः ।
हिताय गरलार्तानां समासात् क्रियते मया ॥ १.५ ॥

### [दुर्दिननिरूपणम्]

सार्पनक्षत्रतिथ्यादिदोषविष्टयाघमङ्गलम् ।
मृत्युदग्धादियोगं च सम्यग् आलोच्य बुद्धिमान् ॥ १.६ ॥

साध्यासाध्यविभागं च ज्ञात्वा युञ्ज्यात् भिषञ्जितम् ।
नो चेत् प्रयाति वैद्यो ऽसौ हास्यतां जनसंसदि ॥ १.७ ॥

### [अमृतकलानिरूपणम्]

शुक्लपक्षे ऽमृतं पुंसां दक्षिणे ऽन्यत्र वै विषम् ।
स्त्रीणां तद्विपरीतेन विपरीतं तथासिते ॥ १.८ ॥

### [दुर्देशनिरूपणम्]

उद्याने च नदीतीरे शून्यगेहे चतुष्पथे ।
देवालये श्मशाने च वल्मीके द्रुमकोटरे ॥ १.९ ॥

अटव्यां तृणपुञ्जे च ग्रामान्ते जीर्णकूपके ।
चैत्यस्थाने प्रपायां च सभायां यागमन्दिरे ॥ १.१० ॥

अश्वत्थजम्बूमूले च वटोदुम्बरवेणुषु ।
रथ्यासन्धौ बिलद्वारे वेत्रपत्राश्मकूटके ॥ १.११ ॥

शिग्रुश्लेष्मातकाक्षेषु जीर्णप्राकारगे तथा ।
शैलाग्रसौधद्वीपेषु दष्टो यदि न जीवति ॥ १.१२ ॥

### [मर्मविभागः]

पादयोर् मध्यतः कुक्षौ नाभौ हृत्कुचमध्यतः ।
उरसिस्कन्धयोः कण्ठे तुण्डे गण्डस्थलेषु च ॥ १.१३ ॥

शङ्खभ्रूमध्यतो मूर्ध्नि कक्षयोर् गुह्यदेशतः ।
चिबुकेन्द्रियश् चापि दोर्मध्ये मस्तके तथा ॥ १.१४ ॥

सर्पेण यदि दष्टः स्यात् तद्रक्षा नैव विद्यते ।
इति देशविभागेन निन्द्यम् आहुश् च ताद्विदः ॥ १.१५ ॥

### [दूतविभागः]

पुष्पादिहस्तः शुभवाक् धैर्यवान् निर्मलाम्बरः ।
वर्णलिङ्गसमानश् च हृष्टो दूतः शुभावहः ॥ १.१६ ॥

### [शुभशकुनाः]

प्रस्थाने मङ्गलोक्तिः पटहमुरवजस्निग्धगम्भीरनादः
शङ्खध्वानं च नीरध्वजसितकुसुमक्षीरदध्याज्यहालाः ।
विप्रौ कन्या नृपो गौर् अपि कुलवनिता ऽलंकृता हेमरुप्ये
दन्तीत्य् एते नराणाम् अभिमुखगतयः कुर्वते कार्यसिद्धिम् ॥ १.१७ ॥

### [अशुभदूताः]

अद्वारगः शस्त्रपाणिर् भ्रूगताक्षः प्रमादवान् ।
दण्डपाशादिहस्तश् च खिन्नो गद्गदभाषणः ॥ १.१८ ॥

शुष्ककाष्ठाश्रितस् तैलेनाभ्यक्तः कन्धरांशुकः ।
कृष्णलोहितपुष्पादिहस्तो मुक्तशिरोरुहः ॥ १.१९ ॥

कुचमर्दी नखच्छेत्ता तृणादिच्छित् पदालिखन् ।
अङ्गहीनो वटुर् व्यग्रो रुदन् रासभगस् तथा ॥ १.२० ॥

एतादृशो यदा दूतस् तदा तस्याशुभं ध्रुवम् ॥ १.२१ ॥

## [निन्द्यशकुनाः]

रोगार्तो मुक्तकेशः प्रचलितचरणः कृष्णरक्तार्द्रवासः
शस्त्री दण्डी विषण्णः प्रविनतवदनो वामतः पाशहस्तः ।
रण्डा कुब्जः क्षताङ्गः क्षपणकसुगताव् अस्थिधारी कपर्दी
जाताश् चेद् वैद्यकान् अभिमुखगतयो दष्टकस्यान्तकास् ते ॥ १.२२ ॥

पश्चिमे वामभागे वा दूतो गत्वा वदेद् यदि ।
दष्टाख्या पूर्वकं नास्ति विषम् अस्ति विपर्यये ॥ १.२३ ॥

दूतस् तु दक्षिणं प्राप्य दष्टम् उक्त्वा पुनश् च सः ।
वामे गतश् चेद् अन्येन शमितं तद्विषं विदुः ॥ १.२४ ॥

वामस्थः पन्नगं पूर्वम् उक्त्वा दक्षिणगश् च सः ।
यदि तं मोहितम् इति वदेद् दष्टम् अतन्द्रितः ॥ १.२५ ॥

एकभागस्थितौ दूतम् आरुतौ शुभदायिनौ ।
भिन्नभागस्थितौ तौ तु रोगिणो मृत्युसूचकौ ॥ १.२६ ॥

दूतवाक्यस्थवर्णेषु हृतेषु गुणसंख्यया ।
शेषैः साध्यं कृच्छ्रसाध्यम् असाध्यं च वदेत् क्रमात् ॥ १.२७ ॥

तथा तद्वाक्यवर्णानि हृत्वा च वसुसंख्यया ।
दर्वी मण्डली राजीमत् संकरान् अपि मूषिकम् ॥ १.२८ ॥

कीडकं चानृतं चैव निर्विषं परिकल्पयेत् ।
चतुर्दिक्षु स्थितो दूतः फणिनं सूचयेद् अहिम् ॥ १.२९ ॥

कोणेषु घोणसं तद्वत् तन्मध्येषु च राजिलम् ।
तत्रापि सूक्ष्मदेशेषु वृषादीन् सूचयेत् तथा ॥ १.३० ॥

एवं सुसूक्ष्मम् आलोच्य चिकित्साम् अचरेद् बुधः ।
दूतो दिक्षु प्रधानासु स्थितो दष्टं नरं तथा ॥ १.३१ ॥

कोणेषु सूचयेन् नारीं तिरश् च श्वसने ऽथवा ।
यदि दूतस्य वाक्यादौ कः किं कुः के ऽपि को भवेत् ॥ १.३२ ॥

एकद्वित्रिश् चतुर्दन्तात् क्रमात् किंचिद् विषं वदेत् ।
दूतो यद् अङ्गं स्पृशति तद् दष्टं दष्टकस्य च ॥ १.३३ ॥

निश्चलः सुखस् तिष्ठेत् सुखं वदति तस्य सः ।
जङ्गमानां विषाणां वै मुख्यं सर्पविषं विदुः ॥ १.३४ ॥

तस्मात् तेषां दंशचिह्नं विषवेगादिकान् अपि ।
ताच्चिकित्सां च वक्ष्ये ऽहं यथामति समासतः ॥ १.३५ ॥

## [दन्तक्षतविवरणः]

दन्तैर् लालापरिक्लिन्नैर् वक्त्रैर् बहुभिर् अन्विता ।
दंशश् चोद्वमिजो ज्ञेयो निर्विषश् च भवेन् नृणाम् ॥ १.३६ ॥

शुष्कैर् निम्नैश् च दन्तैर् यः क्षुधार्तेनोरगेण सः ।
जातो गुरुतरो ज्ञेयः सरके श्यामले तथा ॥ १.३७ ॥

ऋजुभिः स्पृष्टनागेन जातो गुरुतरो मतः ॥ १.३८ ॥

किंचिल्लारक्तैर् युतैर् बहुभिश् च मदेन सः ।
जातः कालविषो ज्ञेयः भिषग्भिः सुमनीषया ॥ १.३९ ॥

दन्तत्रयेण संयुक्तं विस्तीर्णं पिशितान्वितम् ।
रक्तपूरयुतं यत्तत् क्रुद्धनागोद्भवं परम् ॥ १.४० ॥

मृत्युकारणम् आलोच्य प्रत्याख्याय प्रयोजयेत् ।
रक्तलालायुतैश् छिन्नैर् विचित्रैः पिशितान्वितैः ॥ १.४१ ॥

दंशकैर् यत् तु दृश्यते कृच्छ्रसाध्यमुशन्ति तत् ।
स्थानभ्रष्टोरगाज् जातम् इति वैद्यविदो विदुः ॥ १.४२ ॥

## [विषव्याप्तिनिरूपणः]

स्थित्वा मात्राशतं दंशे गरलं दष्टकस्य तत् ।
ललाटं पुनर् आसाद्य नेत्रयोर् वदने ततः ॥ १.४३ ॥

नाडीश् च धातून् द्राग् एव जले तैलम् इवाविशेत् ।
धातोर् धात्वन्तरगतिं वेगम् आहुर् मनीषिणः ॥ १.४४ ॥

गात्रस्तम्भो गुरुत्वं पवनरुगसकृत् पारवश्यं च निद्रा
रोमाञ्चो यच्छरीरे भवति विदुर् अमुं जङ्गमैर् दष्टम् एव ।
यस्मिन्न् आरोहबुद्धिर् ग्रसनविपुलरुक् शोफकण्डू प्रदाहाः
दंशे सक्ष्वेडम् एतद् दशनम् इतरथा निर्विषं वै नशणाम् ॥ १.४५ ॥

रोमाञ्चं त्वचि संस्थितं प्रकुरुते घर्माम्बु रक्तस्थितम्

संतापं च विवर्णतां पिशितगं छर्दिं च वेपन् ततः ।
अस्थिन्य् अक्षिगलोपघातम् अथवा हिक्कां च निःश्वासकृत्
मज्जस्थं त्व् अथ मोहकारि च मृतिं शुक्ले नराणां विषम् ॥ १.४६ ॥

## [दर्वीकरादिविभागः]

फणिमण्डलिराजीलाः क्रमाद् वातादिकोपनाः ।
मिश्रलिङ्गव्यन्तिराख्याः संनिपातप्रकोपनाः ॥ १.४७ ॥

रूक्षः शुष्को ऽसितो दंशः फणीनां भीषणो भवेत् ।
पीतः सोष्मासशोफश् च पृथुर् घोणससम्भवः ॥
शीतस्निग्धो ऽतिशोफश् च सान्द्ररक्तः सितप्रभः ।
दंशो राजीमतां ज्ञेयः व्यन्तिराणां तु मिश्रितः ॥ १.४८ ॥

केतकी पाटलीमल्ली कणवीरसगन्धकान् ।
दंशानाघ्राय जानीयाद् दर्व्यादीनां यथाक्रमम् ॥ १.४९ ॥

एकद्विबहवो दंशाः दष्टं विद्धं च खण्डितम् ।
अदंशम् अवलुप्तं स्याद् दंशम् एव चतुर्विधम् ॥ १.५० ॥

## [मरणलक्षणविभागः]

यस्याङ्गेषु स्वेदकम्पौ जडता च मुहुर् मुहुः ।
निश्वासो हृदये तोदः भ्रमणं नेत्रयोर् भृशम् ॥ १.५१ ॥

श्लेष्मपित्तोद्वमिर् दन्तनखानां श्यावताधिकम् ।
स गच्छेन् नियतं मृत्योर् वशम् एवं विदां मतम् ॥ १.५२ ॥

यस्य दंशक्षतात् कृष्णं रक्तं क्षरति दंशके ।
नीलमण्डलशोफश् च वचः स्यात् सानुनासिकम् ॥ १.५३ ॥

दृग्रागः कक्षयोर् हस्ततलयाश्श्रोत्रमूलयोः । [सिच्]
दन्तक्षतप्रतिकृतिः संतापं च तदातुरः ॥ १.५४ ॥

## [परीक्षणः]

मृत्योः समीपं सम्प्राप्तः नहि तत्र प्रतिक्रिया ।
निशामार्द्रां समादाय गरवेगसमन्विताम् ॥ १.५५ ॥

कुक्कुटक्षतजे पिष्ट्वा लिम्पेद् दष्टकलेबरम् । [सिच्]
उष्णं यदि भवेत् साध्यं विपरीतमतो ऽन्यथा ॥ १.५६ ॥

## [मृतलक्षणः]

न च कुर्यात् क्रियान् तत्र निष्फलं नात्र संशयः ।
ललाटमध्ये शस्त्रेण विद्धे रक्तं न दृश्यते ॥ १.५७ ॥

कृष्णं वा दृश्यते स्वल्पं जलसेकविधौ तथा ।
न रोमहर्षश् चाम्भसु क्षिप्तश्चेत् प्लवते च यः ॥ १.५८ ॥

दण्डताडनतो यस्य रेखा न परिदृश्यते ।
तं मुक्तजीवितं विद्यात् नात्र कार्या विचारणा ॥ १.५९ ॥

दष्टकं प्राणसंदिग्धं तोयाधारे निमज्जयेत् ।
बहवो बुद्बुदाः सद्यः दृश्यते चेन् मृतश् च सः ॥ १.६० ॥

नो चेद् अवहितस् तिष्ठेत् नाडिकार्धं भिषक् ततः ।
तत्रैको दृश्यते तद्वत् किंचित् कालविलम्बने ॥ १.६१ ॥

बुद्बुदान्तरम् आलक्ष्य समुद्धृत्य जवेन ताम् ।
रूक्षनस्याञ्जनैर् वैद्यो यत्नेन परिरक्षयेत् ॥ १.६२ ॥

एवं शास्त्रदृशा सम्यक् परीक्ष्य गरलातुरम् ।
साध्यं चेत् साधयेच् छीघ्रं प्रत्याख्यायेतरं सुधी ॥ १.६३ ॥

**[दर्वीकरविषवेगलक्षणस् तत्चिकित्सा च]**

फणीनां प्रथमे वेगे दंशे दाहो भृशं भवेत् ।
रक्तमोक्षं तत्र कुर्यात् सिरावेधादिभिर् भिषक् ॥ १.६४ ॥

द्वितीये श्यावगात्रत्वं ग्रन्थयः सम्भवन्ति च ।
वेधयित्वा सिरां तत्र सघृतं मरिचं पिबेत् ॥ १.६५ ॥

निःतोदः पारवश्यं च निद्रा च स्यात् तृतीयके ।
शीतोदकेन तत्रादौ सोशीरं चन्दनं पिबेत् ॥ १.६६ ॥

विषे चतुर्थगे गात्रतोदः संकोचवान् भवेत् ।
विण्मूत्रयोर् विबन्धश् च तत्र कुर्यात् भिषग् जितं ॥ १.६७ ॥

तण्डुलीयाश्वगन्धे च पिष्ट्वा तोयेन पाययेत् ।
पञ्चमस्थं विषं कुर्यात् बाधिर्यं हृदयव्यथाम् ॥ १.६८ ॥

मध्ये विध्येत् सिरां स्तन्ये टङ्कणं पाययेत् सुधीः ।
षष्ठे हृद्रोगनिश्वासहिध्मा मूर्छादिमान् भवेत् ॥ १.६९ ॥

रूक्षं नस्याञ्जने कुर्यात् भृङ्गराजरसेन वा ।
सप्तमे प्राणनाशः स्यात् तत्र कुर्यात् भिषग्वरः ॥ १.७० ॥

**[दर्वीकरसामान्यचिकित्सा]**

नस्याञ्जनादिकं सम्यक् कृत्वा प्राणस्य रक्षणम् ।
किंशुकस्वरसे पिष्ट्वा वचाहिङ्गूषणानि च ॥ १.७१ ॥

सर्वदर्वीविषं हन्याल् लेपनात् परमौषधम् ।
तिल्वकार्कस्नुहिक्षीरे प्रत्येकं परिभावितम् ॥ १.७२ ॥

सप्ताहं टङ्कणं सर्पदष्टानां परमं हितम् ।
पाननस्यावलेपेषु गुप्तम् एतन् मनीषिभिः ॥ १.७३ ॥

रसोनहिङ्गुसव्योषम् अर्कदुग्धेन भावितम् ।
नस्यपानादिना हन्यात् सर्वदर्वीविषं क्षणात् ॥ १.७४ ॥

उन्मत्तपत्रं सिन्धूत्थं नागवल्लीदलान्वितम् ।
पिष्ट्वा तद्व्रततोयेन नस्यं दर्वीविषे हितम् ॥ १.७५ ॥

शिरीषपुष्पस्वरसे मरिचं बहुभावितम् ।
संशोष्य तद्रसेनैव कारयेद् अञ्जनादिकम् ॥ १.७६ ॥

अर्कपत्रं सलवणं पिष्ट्वा चन्दनवारिणा ।
सर्वदर्वीविषं हन्याल् लेपनान् नात्र संशयः ॥ १.७७ ॥

एवं दर्वीकरविषे सांक्षिप्योक्तं भिषग् जितम् ।
अथ मण्डलिदष्टानां चिकित्सात्रोच्यते मया ॥ १.७८ ॥

## [मण्डलिविषवेगलक्षणस् तत्चिकित्सा च]

त्वचिस्थे मण्डलिविषे पीतता त्वचि दाहवान् ।
तत्राद्भिः शीतलैः सिञ्चेत् सजलं चन्दनं पिबेत् ॥ १.७९ ॥

द्वितीये वेपथुर् देहे पाण्डुता च प्रजायते ।
विमुच्य रक्तं तत्रादौ लिम्पेत् सोशीरचन्दनम् ॥ १.८० ॥

पाययेच् च जलेनैतत् घोणसानां विषापहम् ।
तृतीये मण्डलिविषे निद्रा तृष्णा च जायते ॥ १.८१ ॥

मधुकोशीरशीतैश् च लेपनं विषनाशनम् ।
चतुर्थे मूकतातोदौ सशोफो ज्वरितस्य वै ॥ १.८२ ॥

तत्र शीतेन तोयेन त्रिफलां पाययेत् भिषक् ।
अस्थिन्य् अक्षिनिरोधश् च दाहश् चित्तभ्रमस् तथा ॥ १.८३ ॥

तत्र रक्तं विमुच्यादौ पाययेत् चन्दनं जले ।
सादो ऽङ्गेषु च सर्वत्र नासारोधं च षष्ठगे ॥ १.८४ ॥

पुनर्नवशिफां पिष्ट्वा पाययेत् कोष्णावारिणा ।
रोधः सर्वेन्द्रियाणां च शुक्लगे मृतिर् एव वा ॥ १.८५ ॥

नस्याञ्जनादि कुर्वीत रूक्षं तत्र भिषग्वरः ।

**[मण्डलीसामान्यचिकित्सा]**

माञ्जिष्ठा लोध्रबिल्वार्करजनीद्वयचन्दनैः ॥ १.८६ ॥

शिरीषपाटलीमूलसरलैश् च समांशकैः ।
पानलेपादिकं कुर्यात् मण्डलीक्ष्वेडनाशनम् ॥ १.८७ ॥

वर्षाभुस्नुक्दिनेशानां मूलं पिष्ट्वा विलेपयेत् ।
गोमूत्रेण च दंशे तन् मण्डलीक्ष्वेडनाशनम् ॥ १.८८ ॥

यष्ट्याह्वचन्दनोशीररास्नाभल्लातकीर् अपि ।
पिष्ट्वा क्षीरेण पानाद्यैर् मण्डली विषनाशनम् ॥ १.८९ ॥

नवनीतदधिक्षौद्रं सैन्धवव्योषसंयुतम् ।
पानलेपादिभिर् हन्याद् घोणसाहिविषं क्षणात् ॥ १.९० ॥

निम्बत्वक् नीलिकामूले पिष्ट्वा नीलीरसेन तत् ।
भक्षयेद् विषशान्त्यर्थं रक्तमण्डलिदष्टकम् ॥ १.९१ ॥

**[विषोपद्रवचिकित्सा]**

धुर्धूरफलम् अन्तस्थसैन्धवेन समं पचेत् ।
आरनाले ऽथ तत् पिष्ट्वा लेपयेच् छोफहृत् परम् ॥ १.९२ ॥

उन्मत्ततिन्त्रिणीपत्रं महिषीशकृता समम् ।
पिष्ट्वा लेपं च कुर्वीत मण्डलीविषनाशनम् ॥ १.९३ ॥

ससैन्धवेन कोष्णेन सर्पिषा सेचयेत् व्रणम् ।
शोफोष्णतोदनाशाय गुह्यम् एतत् परं बुधैः ॥ १.९४ ॥

प्रस्रवं पीतवर्णं स्यान् मण्डलीगरले यदि ।
नक्तमालत्वचं पिष्ट्वा कोष्णतोयेन पाययेत् ॥ १.९५ ॥

उष्णार्तो यदि दष्टः स्यात् तदा सेव्यं सचन्दनम् ।
पाययेल् लेपयेद् वापि सद्यो नष्टविषो भवेत् ॥ १.९६ ॥

तृष्णार्तो मण्डलीदष्टः रम्भाकन्दजलं पिबेत् ।
सक्षीरं यदि मूर्धार्ति स्यान् मूलं काकतिक्तकम् ॥ १.९७ ॥

पिष्ट्वा क्षीरेण पिबतस् सद्यो नश्येत् शिरोरुजम् ।
पक्त्वा चामलकीचर्मक्षीरे मुस्तान्वितं समम् ॥ १.९८ ॥

चन्दनेनापि संयुक्तं पिष्ट्वा लिम्पेल् ललाटिकाम् ।

रक्तं वमति चेद् दष्टः क्षीरे निम्बदलं पिबेत् ॥ १.९९ ॥

आरण्यपाटलीमूलं पिष्ट्वा वा पाययेत् तथा ।
ज्वरार्तो यदि दष्टः स्यात् तिन्त्रिणीमूलवल्कलम् ॥ १.१०० ॥

क्षीरे पिष्ट्वा पिबेत् सद्यो मुच्यते दष्टको ज्वरात् ।
आध्मानं सर्पदष्टस्य जायते चेत् भिषक् तदा ॥ १.१०१ ॥

सिन्धूत्थम् अभयां विश्वं पाययेत् कोष्णवारिणा ।
मूत्ररोधो यदि भवेत् तदैलां कणयान्विताम् ॥ १.१०२ ॥

पिष्ट्वा कोष्णजले पेयं नालिकेरोदके ऽथवा ।
काञ्च्या धारात्र् च कुर्वीत नाभौ तद्रोधशान्तये ॥ १.१०३ ॥

हिध्मायां व्योषमृद्वीकां बीजपूररसान्विताम् ।
लिह्याद् वा क्षौद्रसंयुक्तं वालकस्य रजो ऽथवा ॥ १.१०४ ॥

वास्तिरुग्वर्तनानाहे फलवर्तिं प्रकल्पयेत् ।
सारग्वधां सत्रिवृतां सोपकुल्यां हरीतकीम् ॥ १.१०५ ॥

पिबेद् घृतेन सक्षौद्रां वस्तिशूलादिनाशिनी ।
भूनिम्बकटुकात्रायन्तीन्द्रयवान् समान् ॥ १.१०६ ॥

द्वौ भागौ चित्रकाद् अष्टौ कुटजाद् वारिणा पिबेत् ।
विषातिसारोदावर्तकासश्वासज्वरापहम् ॥ १.१०७ ॥

रक्तातिसारे कुटजस्य मूलाद्वल्कं तदम्भस्य् अथवा त्वचं वा ।
कोष्णेन तोयेन सुपिष्टमद्यात् सद्यो विनश्यत्य् अतिसाररोगः ॥ १.१०८ ॥

त्रिफलायाः कषायेण त्रिवृता भाविता त्र्यहम् ।
आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ॥ १.१०९ ॥

## [विषजन्यवातविकारचिकित्सा]

पिबेद् एरण्डतैलं वा छागमांसरसान्वितम् ।
ऐकध्यं घृततैलं वा मेध्यमांसरसाशनः ॥ १.११० ॥

कार्पासमूलं मरिचं हरिद्रे नलदं नलम् ।
पिप्पलीं स्वार्जिकां कुष्ठं जलेनालोड्य पाययेत् ॥ १.१११ ॥

उन्मत्तं विषवातेन तथापस्मारिणं नरम् ।
सामान्यविधिर् एवालं सर्वोपद्रवशान्तये ॥ १.११२ ॥

विशेषविधिर् अत्रोक्ता शीघ्रं रोगोपशान्तये ।

## [राजिलविषवेगलक्षणस् तत्चिकित्सा च]

त्वचिस्थे राजिलविषे दष्टः शुक्लतनुर् भवेत् ॥ १.११३ ॥

रक्तं विमुच्य सहसा शुण्ठीं कोष्णजले पिबेत् ।
द्वितीये दंशपैच्छिल्यम् अरुणत्वक् च जायते ॥ १.११४ ॥

दंशं तत्राग्नितप्तेन दहेल् लोहेन वैद्यकः ।
गुलूचीं पाययेत् पश्चात् सोषणां कोष्णवारिणा ॥ १.११५ ॥

तृतीयके भवेद् उष्णं विषे राजिलसम्भवे ।
मुखे नेत्रे जलस्रावः तत्र सैन्धवसंयुतम् ॥ १.११६ ॥

व्योषं च मधुना लिह्यात् चतुर्थे वाङ्निरोधनम् ।
शोफतोदज्वराश्चस्यस् तत्र कुर्यात् तु पूर्ववत् ॥ १.११७ ॥ [सिच्]

अस्थिस्थे राजिलविषे श्लेष्मा चातिप्रवर्धते ।
हिक्कां च गलभङ्गं च करोति सहसात्र तु ॥ १.११८ ॥

रक्तं विमुच्य सिन्धूत्थं सव्योषं मधुना पिबेत् ।
मज्जस्थे राजिलविषे हृद्रुक्श्वासनिरोधनम् ॥ १.११९ ॥

मूर्छा च जायते तत्र लवणं लशुनान्वितम् ।
कारवल्लीरसे दत्त्वा तद्विषं कृच्छ्रतो जयेत् ॥ १.१२० ॥

सप्तमे मृतिर् एव स्यात् तत्र मूर्ध्नि विलिख्य तत् ।
सिद्धौषधं न्यसेत् कुर्यात् रूक्षनस्याञ्जनादिकम् ॥ १.१२१ ॥

**[राजिलसामान्यचिकित्सा]**

गोमयाम्बुनि चालोड्य मधुसैन्धवमागधीः ।
पायचेच्छारिबाकन्दं नस्यं कुर्याच् छिवाम्बुना ॥ १.१२२ ॥

आरण्यकारवल्लीनां मूलं क्षीरेण पाययेत् ।
वह्निनिर्गुण्डिकापत्रस्वरसे व्योषकल्कितम् ॥ १.१२३ ॥

नस्यं कुर्याद् यथावस्थं राजिलानां विषे ऽखिले ।
किम्पाकम् अश्वगन्धं च नीलीमूलसमन्वितम् ॥ १.१२४ ॥

आरनालेन सम्पिष्य पेयं राजीमतां विषे ।
सङ्कराणां विषे सर्वं प्रागुक्तम् उपयोजयेत् ॥ १.१२५ ॥

यथादोषं यथालिङ्गं यथावस्थं भिषग्वरः ।

**[छर्दिचिकित्सा]**

मरिचाञ्जनवैदेही गैरिकैर् विहितं रजः ॥ १.१२६ ॥

बीजपूरकसारेण सहितं छर्दिनाशनम् ॥ १.१२७ ॥

दर्वीकराद्यखिलसर्पविषातुराणां
तद्वेगचिह्नम् अथ तद्विषलक्षणं च ।
संक्षिप्य तत् प्रतिविधिं जगतो हितार्थम्
उक्तं मयात्र सुधियः कृपया पुनन्तु ॥ १.१२८ ॥

**॥ इति पूर्वभागः समाप्तः ॥**